# अदृष्टपरीक्षा

महामहोपाध्यायस्य, पण्डितरत्नस्य, आस्थान धर्माधिकारिणः
लक्ष्मीपुरं श्रीनिवासाचार्यस्य
कृतिः.



मैसूरु
राजकीय शाखामुद्रालये मुद्रापितः
१९३४.

# अदृष्टपरीक्षाविषयानुक्रमणिका.

# अदृष्टपरीक्षा.

---

## प्रस्तावना.

अभिवन्द्य महोदारामस्मद्गुरुपरम्पराम् ।
अदृष्टतत्त्वमीमांसां कामपि प्रारभामहे ॥

अदृष्टं नाम किञ्चिद्भूतं सकलमनुजहृदयकुहरे निवसति । तत्तत्त्वमादौ सकलैः मनुष्यैः बोद्धव्यम् । तदेतददृष्टं दैवं दिष्टं विधिः नियतिः कर्म पुण्यं पापमित्यादिभिश्शब्दैर्व्यपदिश्यते । तस्य सामर्थ्यं तत्प्रतिद्वन्द्विभूतस्य पौरुषापराभिधानस्य प्रयत्नस्य च सामर्थ्यं च अन्योन्यस्य सामरस्येन निर्वहणीयमित्यार्यसंप्रदायः । तस्यादृष्टाभिधानस्य कर्मणः तत्त्वं दुर्बोधमिति भगवान् वासुदेवोऽप्यगायत्—

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ (४-१७)

इति । अत्र विकर्मणः अकर्मणः इति पदयोः संदर्भानुसारेण विचित्रार्थभाषणेऽपि कर्मगतेः गहनरूपत्वे न कस्यापि विवादः ॥

## सामर्थ्यविकल्पः

तत्र केचित्स्वभावाद्वा कालात्पुरुषकारतः ।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ (१-३५०)

इति याज्ञवल्क्यः स्मरति । तस्यैतस्य वचनस्य परीक्षायां चत्वारो विकल्पाः परिस्फुरन्ति । ततश्च चत्वारस्स्वतन्त्रा वादाः स्थिता इत्यवधार्यते । दैवस्वातन्त्र्यवादः स्वभावस्वातन्त्र्यवादः कालस्वातन्त्र्यवादः पुरुषकारस्वातन्त्र्यवादश्चेति । आचार्यसम्मतस्तु वादः सर्वसमु-

च्छय: पुरुषकारप्रधान: वाद: । स एव उत्तरार्धेन विशदीकृत: ॥

ततश्चात्र बाधविकल्पसमुच्चयपक्षा इति त्रय: पक्षा: फलन्ति। यथा आश्रमचतुष्टये गृहस्थाश्रम एक एवाश्रम: नेतरे इति पक्ष: आचार्यजैमिनिसम्मत इति विश्रुतमेतत् । विकल्पपक्षस्तु बादरायणसम्मत: आपस्तम्बादिभि: प्रदर्शित: । समुच्चयपक्षस्तु मन्वादिसम्मत इति च सुप्रसिद्धम् ॥

यथा वा मोक्षं प्रति ज्ञानकर्मणोस्साधनत्वपरीक्षायामेते पूर्वोक्ता: पक्षा: त्रय: सन्ति । तत्र ज्ञानस्यैव मोक्षसाधनत्वमिति साङ्ख्यो-पज्ञमौपानिषदैस्समाश्रित: एक: बाधपक्ष: । कर्मण एव मोक्षसाधन-त्वमित्यपर: जरन्मीमांसकसम्मत: बाधपक्ष: । विकल्पपक्षस्तु भागवत-सिद्धान्त: । यथा (भगवद्गीता ५-४)----

साङ्ख्ययोगौ पृथग्बाला: प्रवदन्ति न पण्डिता: ।
एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥
यत्साङ्ख्यै: प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च य: पश्यति स पश्यति ॥

इति । अत्र साङ्ख्ययोगपदे ज्ञानकर्मपरे ॥

समुच्चयपक्षस्तु विचित्र: समसमुच्चयपक्ष: विषमसमुच्चयपक्ष-श्चेति । आद्यं पक्षमौपवर्षा: यादवप्रकाशादयश्च प्रपेदिरे । अन्त्योऽपि ज्ञानानुषक्तकर्मपक्ष: कर्मानुषक्तज्ञानपक्षश्चेति द्विविध: । प्रथम: कुमारिल-सम्मत: । द्वितीये कर्माङ्गकज्ञानपक्षेऽपि आरादुपकारकत्वरूपादृष्टद्वारक-त्वलक्षणाङ्गतावाद: भास्करसम्मत: । करणशरीरनिष्पादकत्वलक्षणसान्नि-पत्योपकारकतारूपाङ्गतावाद: रामानुजसम्मत: । दूरादुपकारकत्वलक्षणा-रादुपकारकत्ववाद: शङ्करसम्मत: । तथा --अदृष्टपरीक्षायामपि मत-भेदास्सन्तीत्यत्र नाश्चर्यम् ॥

पौरुषप्रधानः समुच्चयपक्षः याज्ञवल्क्यसम्मत इत्यत्र उत्तरोयं श्लोकः—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।

एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ (१-३५१)

इति समुच्चयवादः । पौरुषप्राधान्याभिप्रायस्तु —

दैवे पुरुषकारे च कर्मसिद्धिः व्यवस्थिता ।

तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ॥ (१-३४९)

इति पद्येन विशदीकृतः । अत्रायमभिप्रायः —प्राणिनामभ्युदयविनिपातादीनां दैवायत्तत्वात् यदि दैवमस्ति तदा परराष्ट्रादिकं स्वयमेव वशीभविष्यति । अथ नास्ति कृतेऽपि पौरुषे न भविष्यति । नियमादर्शनात् । अतो व्यर्थ एवायं प्रयत्नप्रयास इत्यत आह—दैव इति ॥ कर्मसिद्धिः फलप्राप्तिरिष्टानिष्टादिलक्षणा । सा न केवलं दैवे व्यवस्थिता, अपि तु पुरुषकारेऽपि । लोके तथा दर्शनात् । चिकित्सादिशास्त्रवैयर्थ्यापाताच्च । अपि च पुरुषकाराभावे दैवमेव नास्तीत्याह—तत्र दैवमिति ॥ यतः पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते । अल्पपुरुषकारानन्तरं महाफलोदयात् अभिव्यक्तं पौरुषं पौर्वदैहिकम् । तस्मात्पुरुषकाराभावे न दैवमस्तीति पुरुषकारे यत्नो विधातव्य इति । तथा च पुरुषकार एव पूर्वापरभावेन सकलफलसाधनं इति पुरुषकारप्राधान्यवादः ॥

एवं दैवतत्त्वे स्थितेऽपि आलस्यवादाः विचित्राः प्रवर्तन्ते । तत्रायमेकः—

दृष्टश्च साध्वीसुतयोः यमयोस्तुल्यजन्मनोः ।

विशेषो वीर्यविज्ञानसौभाग्यारोग्यसम्पदाम् ॥ इति ॥

अतः प्रयत्नवाद एव बहुसम्मतः ॥

### न्यायाचार्यसम्मतिः.

तत्र न्यायाचार्याणामुदयनादीनामभिप्रायं विशदयामः—इह हि कार्यमात्रे पुण्यपापलक्षणमदृष्टं दैवरूपं कर्म कारणमिति चार्वाकेतरसकल-

सिद्धान्तसमंतोऽयं पन्थाः । तदेतददृष्टं सकलामपि बुद्धिप्रयत्नादि-घटितां दृष्टसामग्रीं संपाद्य कार्यं करोतीति कर्मप्राधान्यवादिनः प्राहुः । निरूपकास्त्वितरे एवमाहुः—दृष्टसामग्रीवैकल्ये अदृष्टं दूरे तिष्ठति प्रतीक्षते च समयम् । इतरथा चित्राधिकरणसिद्धान्तविरोधः । तत्र हि चित्रापूर्वं दृष्टसामग्र्यां प्रतिबन्धकाभावादिघटितायां सत्यामिहैव जन्मनि फलं प्रयच्छति, असत्यां तु जन्मान्तरे इति निर्णीतम् ॥

यद्यदृष्टमेव दृष्टोपसंहारकरं स्यात् तदा कर्मप्रवाहपतितोऽयं मनुष्यः जलवाय्वादिनीयमान इव सर्वात्मना परतन्त्र एव स्यात । ततश्च स्वभाववाद इव अदृष्टवादेऽपि—

आलस्यं प्रथमो दोषः प्रवृत्तिविरहस्ततः ।
निरर्थं सर्वशास्त्रं स्यात् देशकालाव्यवस्थितिः ॥

इत्यादयः दोषाः प्रादुःष्युः । ततश्च लोकयात्राविरोधः स्पष्ट एव ॥

तदेतत्सर्वमभिप्रेत्य न्यायकुसुमाञ्जलिः एवं प्रवृत्तः—"करतला-नलसंयोगाद्यादृशादेव दाहो दृष्टः तादृशादेव मन्त्रादिप्रतिबन्धे सति दाहो न जायते । असति तु जायते । तत्र न दृष्टवैगुण्यमुपलभामहे । नापि दृष्टसाद्गुण्ये अदृष्टवैगुण्यं सम्भावनीयम् । तस्य दृष्टसाद्गुण्यमात्रा-धत्वात्, अन्यथा कदाचित् कर्मण्यपि विभागः न जायेत" इति ॥(१ स्त)

अयंभावः—अदृष्टविलम्बात्कार्यविलम्बः न क्वापि दृष्टः । अतः अदृष्टं दृष्टसामग्रीसाद्गुण्यसम्पादकं, न तु सामग्रीघटकम् । अन्यथा क्रिया क्रियातो विभागः विभागात्पूर्वदेशसंयोगनाशः तत उत्तरदेशसंयोगो-त्पत्तिरिति क्रमे कदाचित् कर्मणि जातेऽप्यदृष्टविलम्बात् विभागविलम्बः स्यादिति ॥

तत्रैवान्यत्र—"इदानीं तु बीजादिसन्निविष्टानां पाकजादिविशे-षाणामस्मदादिभिरुपसम्पादनम् । सृष्टिकाले तु विभक्तानामदृष्टादेव केव-

लात् मिथस्संसर्ग इति विशेषः । न च वाच्यमिदानीमपि तथैव किं न स्यात् । यतः कृष्यादिकर्मोच्छेदे तत्साध्यानां भोगानामुच्छेदप्रसङ्गात् । कार्यकारणभावव्यभिचारेणाव्यवस्थापत्तिश्च । अदृष्टानि कर्माणि दृष्ट कर्मव्यवस्थयैव भोगसाधनानीत्युन्नीयते । तस्मात्पाकजविशेषैः संस्थानविशेषैश्च विशिष्टाः परमाणवः कार्यविशेषानारभन्ते" इति ॥

अनेनापि संदर्भेण दृष्टव्यवस्थानतिक्रमणेव अदृष्टं कार्यकारि, न हि स्वरूपेण साक्षात्कार्यं करोति । नापि निरङ्कुशं स्वतन्त्रमिति च सिद्धं भवति । उक्तं च बाह्यैरपि बोधिचर्यावतारे (४६८)

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ इति ॥

### वेदान्ताचार्यसम्मतिः.

तात्पर्यचन्द्रिकाया (३–८) एवमनुश्रूयते—'अस्तु शरीरधारणमपेक्षितम्, तन्न स्वेच्छया चिरकालं कर्तुं शक्यम् । नाप्यौदासीन्यमात्रात्तन्निवृत्तिः, आरम्भककर्मशेषेण नियतावधिकत्वात् । स्मरन्ति च कर्मकाः 'प्रतिनियतानि विवाहो जन्ममरणमित्यादीनि' इति । एवं सति कथमुच्यते—'शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः' इति । अत्रायमभिप्रायः—द्विविधानि कर्मफलानि नियतान्यनियतानि चेति । प्रबलशापादिसम्भवानि नियतानि । इतराण्यनियतानि । अनियतत्वं च तेषां देशकालाद्यपेक्षया, न तु स्वरूपतः । येन कर्मणां निष्फलत्वप्रसङ्गस्स्यात् । ततश्च यान्यधिकृत्य प्रायश्चित्तमन्त्रौषधनीतिशास्त्रादीनि । अन्यथा विजिगीषुभिरुपपन्नपरिपन्थिभिरपि न चतुरङ्गादिकमङ्गीक्रियेत । आतुरैरपि न भेषजमुपभुज्येत । स्वेच्छया किञ्चित्करणाभावे स्वारसिककर्तृत्वाभावात् शास्त्राणामप्यनुदय इति । शास्त्राणि तु आयुष्कामेष्टि-

विधायकशास्त्राणि, 'न पुराऽऽयुषः प्रमीयेत' इति निषेधशास्त्राणि च ॥

दृप्तस्य तु यथाशास्त्रं चिरं जीवितुमिच्छतः ।
प्राणरक्षणशास्त्रार्थलङ्घनं त्वपराधनम् ॥

इत्यादीनि वचनान्यपि (चरमश्लोकाधिकारे ६३८) अवगन्तव्यानि ॥

### पुराणसम्मतिः.

श्रुतप्रकाशिकायां पुराणप्रकरणे —

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपनीतो विनश्यति ॥
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः ।
दृढप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥
पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः ।
नष्टप्रज्ञः पापमेव पुनरारभते नरः ॥

वासुदेवोऽप्याह (गीता)—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।

इति ।

मोक्षधर्मे चतुर्मुखस्य भगवदंशत्वं वक्तुमेवमुक्तम् (३५९ अ.)—

नारायणो महायोगी शुभाशुभविवर्जितः ।
ससर्ज नाभिजं पुत्रं ब्रह्माणममितप्रभम् ॥
ततस्स प्रादुरभवत् अथैनं वाक्यमब्रवीत् ।
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ॥

सृज प्रजास्त्वं विविधाः ब्रह्मन् सजडपण्डिताः ।
स एवमुक्तो विमुखः चिन्ताव्याकुलमानसः ॥
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् ।
का शक्तिः मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते ॥
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ।
स एवमुक्तो भगवान् बभूवान्तर्हितस्ततः ॥
चिन्तयामास विश्वेशः बुद्धिं बुद्धिमतां वर ।
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् ॥
योगेन चैनां संयोज्य स स्वयं युयुजे तदा ।
स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम् ॥
उवाच वचनं देवः बुद्धिं वै प्रभुरव्ययः ।
ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ॥
तदर्थमीश्वराविष्टा बुद्धिः क्षिप्रं विवेश सा ।
ततस्तं बुद्धिसंयुक्तं पुनस्तं ददृश हरिः ॥
भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः ।
बाढमित्येव जग्राह यथाऽऽज्ञां शिरसा हरेः ॥
तथाऽकरोच्च धर्मात्मा ब्रह्मा लोकपितामहः ॥

इति । अत्र भगवदनुप्रविष्टया बुध्या तदाहितशक्त्याऽनुप्रविष्टत्वात् सृष्टिसामर्थ्यं ब्रह्मण उक्तम् । अतः चतुर्मुखस्य भगवदवनारत्वमनुप्रवेशकृतमिति ॥

अनेनोपाख्यानेन बुद्धिपूर्विकैव सर्वा प्रवृत्तिः न तु वायूदकादिप्रेरणवदिति सुव्यक्तम् । अपि चानेन वेदापहारतत्प्रदानादिवृत्तान्तोऽपि व्याख्यातो भवति ॥

अनुष्ठानसम्मतिः.

अवतारदशायामपि भगवान् लोकव्यवस्थां दृष्टां अदृष्टशक्त्या न व्याकुलयतीति स्पष्टमुच्यते ॥ (श्रुतप्रकाशिका. पुराणम् १३१ पु)—

मनसैव जगत्सृष्टिं संहारं च करोति यः ।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥
तथाऽपि यो मनुष्याणां धर्मस्तदनुवर्तनम् ।
कुर्वन् बलवता सार्धं हीनैर्युद्धं करोत्यसौ ॥
साम चापि प्रदानं च तथा भेदप्रदर्शनम् ।
करोति दण्डपातं च क्वचिदेव पलायनम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते ।
लीला जगत्पतेस्तस्य छन्दतस्संप्रवर्तते ॥
ईशन्नपि महायोगी कीनाश इव दुर्बलः ।
कर्माण्यारभते कर्तुं सर्वस्य जगतः प्रभुः ॥
तेन वञ्चयते लोकान् मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते ते न मुह्यन्ति मानवाः ॥

इति । एतदभिप्रेत्यैव श्रीवत्साङ्कमिश्रैरेवमुक्तं पञ्चस्तव्याम्—

रूपप्रकारपरिणामकृतव्यवस्थं
विश्वं विपर्यसितुमन्यदसच्च कर्तुम् ।
क्षाम्यन् स्वभावनियमं ह्यनुवर्तसे त्वं
स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ॥

इति । ईश्वरोऽपि लोकव्यवस्था न विपर्यस्यतीति । सिद्धान्तप्रबन्धेषु न क्वापि लोकोत्तराद्भुतशक्तिप्रदर्शनेन ईश्वरत्वं आचार्यत्वं सर्वज्ञत्वं सर्वशक्तत्वं वा व्यवस्थापितमस्ति । ततश्चाधुनातनानां बुद्धपरमहंसादीनामद्भुतचरित्रोदाहरणेन संघीकरणं व्याख्यातं भवितुमर्हति ॥

(अनुवर्तते)

## अद्भुतगतिः.

आर्यपुराणसत्कथासु च श्रूयमाणानामद्भुतानां उपपत्तिः तन्त्रवार्तिके कुमारिलभट्टाचार्येण आस्तिकाग्रेसरेण प्रदर्शिता । यथा -(१-२ ७) 'एवं भारतादिवाक्यान्यपि व्याख्येयानि । तेषामपि हि " श्रावयेच्चतुरो वर्णान् " इत्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणात् । अक्षरार्थोऽपि गम्य-धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिः उपादानपरित्यागाङ्गभूता फलम् । तत्रापि तु दानराजमोक्षधर्मादिषु केचित्साक्षाद्विधयः. केचित्पुनः परकृतिपुराकल्परूपेणार्थवादा । सर्वोपाख्यानेषु तात्पर्ये सति श्रावयेदिति विधेरानर्थक्यात् कथंचिद्गम्यमानस्तुतिनिन्दापरिग्रहः । तत्पर त्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः । वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिः तथैव स्ववाक्यानि प्रणीतानि । प्रतिपाद्यानां च विचित्रबुद्धित्वाद्युक्तमेवैतत्' इति । प्रतिपाद्याः श्रोतारः ॥

## वचनगतिः.

एवं लोकशास्त्रव्यवस्थायां सत्यामेतानि वचनानि व्याख्यातव्यानि —

उत्पत्तिस्थितिनाशानां स्थितौ चिन्ता कुतस्तव ।
यथोत्पत्तिर्यथा नाशः स्थितिः तद्वद्भविष्यति ॥

अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठति ।
कर्मी कर्मापि कृत्वाऽन्यो न प्राप्यमधिगच्छति ॥

उत्पतन्नपि चाकाशं विशन्नपि रसातलम् ।
अटन्नपि महीं कृत्स्नां नादत्तमुपतिष्ठते ॥

अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥

यत्किंचिद्वर्तते लोके सर्वं तत् मद्विचेष्टितम् ।
अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहम् ॥
यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः ।
शेषवृत्तिविधानेऽपि सुप्तः किमथवा मृतः ॥

इत्यादीनि वचनानि महाभारतादौ विस्तरभीतिप्रदानान्यनुश्रूयन्ते । एतादृशानीतोऽप्यधिकानि च वचनान्युदाहृत्य ' एतेषां वचनानां कर्मणां फलजननशक्तिसत्तायां तात्पर्यम् । न तु कश्चिदपि प्रयत्नं अकृत्वा तूष्णीं स्थातव्यमिति । अन्यथा भोजनादयोऽपि व्यापाराः परित्यक्तव्याः स्युः ।

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

इति ' श्रीमति रहस्यत्रयसारे तात्पर्यमुपवर्णितं वेदान्ताचार्यवर्यैः । अत एवेदं मानवं वचनमप्युपपद्यते —

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आमृत्योः श्रियमन्विच्छेत् नैनां मन्येत दुर्लभाम् ॥ इति ॥

## जीवात्मस्वातन्त्र्यम्

एवं पुरुषकारप्राधान्ये सति जीवात्मनः स्वातन्त्र्येण कर्तृत्वावकाशेन विधिनिषेधशास्त्राणामवकाशे सति परमेश्वरस्याज्ञारूपं शास्त्रमनुवर्तितवतामनुग्रहः, अतिवर्तितवतां निग्रह इति सिद्ध्यति व्यवस्था । तत्र जीवात्मनः स्वातन्त्र्यं नाम उत्पन्नज्ञानचिकीर्षाप्रयत्नस्य कारकान्तरप्रयोक्तृत्वलक्षणम् । तदेतत् ' स्वतन्त्रः कर्ता ' इति पाणिन्यादिसम्मतम् । अपि च सांप्रदायिका अन्यदपि स्वातन्त्र्यं कथयन्ति—प्रवृत्तिशक्तस्य इच्छायां सत्यामन्यैरनिवार्यत्वमिति । अत्र यद्यपीयमाशङ्का समुदेति —

यं तु कर्मणि यस्मिन् सः न्ययुङ्क्त प्रथमं विभुः ।
तदेव स पुनर्भेजे सृज्यमानः पुनःपुनः ॥ (१-२८)

यादृशेन तु भावेन यद्यत्कर्म निषेवते ।
तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ (१२-८१)

इति मनुः ॥

न गाथा गाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥

जन्मान्तरसहस्रेषु बुद्धिर्या भाविता पुरा ।
तामेव भजते जन्तुः उपदेशो निरर्थकः ॥

इति (महाभारते सभा–४४) व्यासः ॥

अत्रायमर्थः—कुलिङ्गशकुनिर्नाम कश्चित्पक्षी 'साहसं मा कुरु साहसं मा कुरु' इति सर्वदा सर्वान् प्रत्युपदिशन् स्वयं पुनः पाटितमत्तेभकुम्भस्य भीमस्फुरन्नखशिखाशिखरस्य सिंहस्य जृम्भासमये वदनं प्रविश्य दंष्ट्रान्तराले संलग्नं मांसशकलमुद्धृत्य भक्षयन्नास्ते इति ॥ गीयते च—

सदृशं चेष्टते स्वस्याः प्रकृतेः ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ इति ॥

शास्त्रकृतो निग्रहः निर्बन्धः किं करिष्यति निरर्थक इत्यर्थः । इत्यादीनि वचनानि पुरुषकारलक्षणं स्वातन्त्र्यं प्रतिबध्नन्तीति॥

अयमत्र समाधिः भगवतैव समुपदिश्यते । यथा—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥

इति । अयमर्थः—प्रकृतिर्हि प्राचीनवासनापरपर्याया वायूदकादिवत्पुरुषं न प्रेरयति । अपितर्हि रागादिकं जनयित्वा तद्द्वारा कार्यं कारयति । प्राचीनवासनया शुभे अशुभे वा कर्मणि रागादिजननेऽपि

रागाद्यनुरोधेनैव प्रयतितव्यमिति न निर्बन्धः । रागादिक प्रतिबध्य विवेकं पुरस्कृत्य पुरुषः प्रवर्तितुं निवर्तितुं वा समर्थ एव । ततश्च प्राचीनवासनानुरोधेन इष्टसाधनताज्ञाने सति इच्छायां सत्यामपि तदधीनो न भवेत्, पौरुष पुरस्कुर्यादिति तयोर्न वशमागच्छेदिति वाक्यस्याभिप्रायः । प्रागुदाहृतपूर्वपक्षवचनानि तु अविवेकिनां प्रायेण सभाव्यमानस्यार्थस्याभिधायकानीत्यवधेयम् ॥

## शास्त्राधिकारः.

नहि पूर्वमश्वमेधादिकारणमदृष्ट कृतमिति तेनैवेदानीमश्वमेधादि निष्पद्यते. शास्त्रजन्यबुद्ध्यादिसापेक्षत्वात्तस्य । एवं पापहेतुभूतमप्यदृष्ट स्वबुद्ध्यैव निवृत्तियोग्यतया शासनानर्हदशामापाद्य पापे प्रवर्तयतीति प्रवृत्तिमात्रे ज्ञानेच्छापूर्वकत्वं दृश्यते ॥

लौकिकप्रवृत्तावपि ज्ञानेच्छादिकं विना प्रयत्नादर्शनात् विधिनिषेधवाक्यं यथा सावकाशमेव वेदेऽपीति नकश्चिद्विशेषः । तस्माद्विधिनिषेधशास्त्रं च सफल. स्वातन्त्र्यं च संरक्षित, रक्षणशिक्षणाद्यर्हत्वमपि सूपपादितम् ॥

## ईश्वरस्वातन्त्र्यम्.

एवंविधपौरुषलक्षण कर्तृत्वं विधिनिषेधार्हत्वलक्षणं स्वातन्त्र्यं च परमात्मायत्तमिति बादरायणसिद्धान्तः । अत्रेत्थमाशङ्का—नन्वेवं परमात्मायत्ते जीवात्मनः कर्तृत्वे जीवात्मा कर्मण्यानियोज्यो भवतीति विधिनिषेधशास्त्राण्यनर्थकानि स्युरिति । सैषा आचार्यबादरायणेनैवं परिहृता "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" इति । तदुपर्यपीयमाशङ्का—सर्वप्रवृत्तिषु परमात्माधीनासु कथं कृतप्रयत्नापेक्षत्वमुच्यते । वैयर्थ्यचोद्यस्यावैयर्थ्यसिद्ध्या परिहारे साध्याविशेषश्च स्यादिति । सूत्राभि-

प्रायः एष शैवागमादिसिद्धं निरपेक्षेश्वरवादं निरङ्कुशस्वातन्त्र्याभिलाषेण-दोषजातमपि गुणजातमित्यभिप्रयन्तं प्रतिक्षेप्तुं सापेक्षेश्वरवादः सिद्धान्तितः। निरङ्कुशस्वातन्त्र्यमेव ईश्वरस्येश्वरत्वम्। जीवात्मकृत कर्मापेक्ष्य-ईश्वरस्य फलप्रदत्वे परादृष्टपराधीनता नाम अविषह्यो दोषस्स्यात्, ईश्वरत्वं च कुण्ठितं स्यात्। अतः जीवात्मकृतकर्मानपेक्ष्यैव परमेश्वरः सर्वकार्यकारणमिति निरपेक्षेश्वरवादसारांशः। तस्मिन् पक्षे ईश्वरस्या व्यवस्थितचित्तत्वलक्षणः कश्चिन्महान् दोषः प्रसज्यते। जीवात्मनामालस्यादिलक्षणस्य दोषस्यावकाशश्च स्यात्। अत न्यायबद्धेश्वरवाद एव शोभनः। किं नाम तर्हीश्वरस्य ईश्वरत्वव्यवस्थापकं प्राधान्यमिति चेत् श्रूयताम्—करणकळेबरपुण्यपापलक्षणादृष्टकालदेशादिघटितसामग्रीमध्ये परमेश्वरः स्वातन्त्र्येण प्रविष्टस्सन् अधिष्ठाता भवतीति तस्य प्राधान्यम्। तस्य च कार्यसामान्यं प्रति हेतुत्वं "तेन विना तृणाग्रमपि न चलति" इतिश्रूयमाणं अङ्कुरादिकं प्रति सलिलवत्साधारणम्। 'पर्जन्य-वदीश्वरप्रवृत्तिः' इत्यपि व्यपदिश्यते। गीयते च--(१८-१३,१४.)

पञ्चैतानि महाबाहो कारणानि निबोधमे।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्। इति॥

अयमर्थः—न्याय्ये शास्त्रसिद्धे विपरीते प्रतिषिद्धे वा सर्वस्मिन् कर्मणि शारीरे वाचिके मानसे च पञ्च एते हेतवः। अधिष्ठानं शरीरं कर्ता जीवात्मा करणं च पृथग्विधं वाक्पाणिपादादिपञ्चकं समनस्कम् पृथग्व्यापारं विविधा च पृथक्चेष्टा पञ्चात्मा वायुः। अत्रवृत्तिवाचिना चेष्टापदेन वृत्तिमानभिधीयते। दैवं चैवात्र पञ्चमं अत्र कर्महेतुकलापे दैवं पञ्चमं परमात्मा अन्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरिति॥

अत्र यद्यपि "दैवं पुराकृतं कर्म, दैवं दिष्टं भागधेयम्" इति वचनात् प्राचीनकर्मपरमित्यापाततः प्रतीयते । तथापि—

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥
श्रूयतां परमं दैवं दुर्विज्ञेयं मयाऽपि च ।
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥

इत्याद्यध्यात्मशास्त्रप्रयोगात् प्रकृते वासुदेवपरम् ॥ इति ॥

अपि च "स्वतन्त्रः कर्ता" इत्यनुशासनात् कारकान्तरप्रयोक्तृत्वं कारकान्तराप्रयोज्यत्वं च जीवात्मनः अस्तीति स एवात्र कर्ता इति शब्देनोपदिष्टः । जीवात्मनः तादृशमपि स्वातन्त्र्यं परमात्मायत्तमिति सर्वशास्त्रसम्मतम् । तथाहि उत्पन्नज्ञानाचिकीर्षाप्रयत्नस्य हि पुरुषस्य कारकान्तरप्रयोक्तृत्वादिकम् । ज्ञानाद्युत्पत्तिरेव तु परमात्मसंकल्पायत्ता । परमात्मनस्तु ज्ञानाद्युत्पत्तिः न पुरुषान्तरसंकल्पायत्तेति तस्य प्राधान्यम् । एतदभिप्रायेणैव कारककलापे प्राधान्येन दैवव्यपदेशः । अत्र परमात्मसंकल्पस्य ज्ञानचिकीर्षादिजननद्वारा प्रेरकत्वनिर्णयात् वायूदकादिवत्प्रेरकत्वमित्याशङ्का व्यावर्त्यते । आशङ्काभिप्रायस्त्वेषः—ज्योतिष्टोमादिषु यदि परमात्मा प्रेरयति तदा जीवस्य न किंचिद्विधेयम् । न हि प्रबलेन ह्रियमाणस्य गमनविधिः । अथ निरुन्धे तथापि न विधेयम् ' न हि दुर्बलस्य प्रबलेन निरुद्धस्य गमनविधिः । एवं यत्र परमात्मा प्रवर्तयति तत्र निवृत्तेरशक्यत्वात् निषेधो निष्फलः । यत्र तु न प्रवर्तयति तत्रापि प्रवृत्तेरेवाशक्यत्वात न निषेधापेक्षेति । अयमत्र चार्वाकेतरसमस्तसिद्धान्तावलम्बिनी चोद्यकाष्ठा —

निग्रहानुग्रहेशानपूर्वादृष्टप्रचोदितः ।
निग्रहानुग्रहाद्यर्ह इतीदं घटते कथम् ॥

इति । सिद्धान्तसारांशस्तु—

तत्तदिष्टादृष्टमूलशास्त्रवश्यदशान्वयात् ।
पुनस्तथातथा दृष्टमपत्तिरुपपद्यते ॥
पुमर्थसाधनत्वेन प्रतीत स्वेच्छया पुमान् ।
प्रवर्ततेति तादर्थ्यात् सावकाशाऽत्र चोदना ॥

इति ॥

यत्तु करणकळेबरशक्तिज्ञानवाञ्छादिषु विषमप्रदानम्, अनभिमतप्रवृत्तावनिवारणम्, अनुमतिदानम, प्रत्यवायजननम्, तदपि अनादिपूर्वकर्मवैषम्योपाधिकतया नेश्वरस्य वैषम्यनैर्घृण्यापादकम् । एवं च जीवात्मस्वातन्त्र्यं शास्त्रवश्यत्व रक्षणशिक्षणाद्यर्हत्वं शास्त्रसार्थक्यं कर्मणां सावकाशत्व परमात्मनस्सर्वत्र प्राधान्येन कारणत्वं सर्वान्तर्यामित्वं वैषम्यनैर्घृण्यादिरहितत्वं कृतप्रयत्नापेक्षत्वमित्यादिक सर्वमुपपन्नम् ॥

## सारार्थः

अयमत्र सारार्थः ईश्वरवादिनां सर्वेषा साधारणः—चार्वाकेतरसकलदार्शनिकाः पुण्यपापलक्षणमदृष्टमभ्युपगच्छन्ति । तादृशादृष्टाभ्युपगमादेव देहातिरिक्तात्मसिद्धिः । विश्ववृत्तिसाफल्यं च । तादृशादृष्टाख्यस्य कर्मणः स्वरूपे विचित्रा दार्शनिकानामभिप्रायाः ॥

विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
तृप्तिः फलप्रदानं च देवतानां न विद्यते ॥

इत्यादिना जरन्मीमांसकानां सिद्धान्ते अचेतनदेवतावादः अवगम्यते । जैमिनिनाऽपि देवताधिकरणे तादृशी सचेतना देवता निराकृताऽवधार्यते । देवताविषयकवेदवचसामर्थवादपरतया स्वार्थे प्रामाण्याभावस्समर्थितः । स्मृतीतिहासपुराणादीनां तादृशानां वेदमूलकत्वाभावादप्रामाण्य-

मेव स्पष्टं शालिकनाथादिकण्ठोक्त्याऽवगम्यते । कर्मस्वरूपमेव सूक्ष्मरूपेण फलावस्थमदृष्टपदव्यदेश्यं भवितुमर्हतीति कुमारिलः स्पष्टं लिखति ॥ -

## पापं नास्ति.

तस्यामवस्थायामयमपरो विशेषः—अदृष्टं पुण्यरूपमेव काम्यकर्मजनितम् । नित्यनिषिद्धयोस्तु कर्मणोः फलमेव नास्ति, तज्जन्यमपूर्वलक्षण दुरदृष्टरूपं पापशब्दवाच्यं सुतरां नास्ति । निषिद्धकर्मकर्तॄणां 'द्विजातिकर्मभ्यो हानिः पतनम्' इत्यादिना पातित्यं कर्मानधिकारलक्षणं लौकिकमेव दृष्टमुपगतम् । तत्फलभूतं नरकशब्दवाच्यमपि नीचैः करण संघबहिष्करणलक्षणं दुःखरूपमिति नरकशब्दव्याख्याने यास्केन निरूपितम् । एतत्सर्वं गौतमधर्ममस्करिभाष्ये स्पष्टं द्रष्टव्यम् । अयं च मार्गः भर्तृमित्रसिद्धान्त इति श्लोकवार्तिकन्यायरत्नाकरे पार्थसारथिमिश्रेण सूचितम् । तन्मते धर्म एव चोदनालक्षणः, अधर्मस्तु लोकलक्षण इति द्वितीयसूत्रार्थः । इदानीतनास्तु धर्मपदमधर्मोपलक्षणमिति व्याख्यान्ति । तथाचापूर्वमपि न कर्मरूप नापि फलरूपं त्रिशङ्कुरिवान्तराले स्थापितमुभयरूपमिति कौमारिलसरणिः ॥

## बादरायणसरणिः.

बादरायणाचार्यसिद्धान्तस्तु— अर्थवादानां मन्त्राणां तन्मूलकेतिहासापुराणादीनां च स्वार्थे प्रामाण्यमुपगम्यते। अदृष्टं नामापूर्वमपि देवताप्रीतिरूपमिति निर्धारितम् । तथा पापशब्दवाच्यमपि दुरदृष्टं देवतानिग्रहलक्षणमङ्गीकृतम् । परंब्रह्म परतत्त्व परंज्योतिः परमात्मा परदेवता परागतिः पराकाष्ठा परमपुरुषः इत्यादिभिः शब्दैः व्यपदिश्यमानस्य कस्यचिद्वस्तुनः अभ्युपगतिरपि स्मृतीतिहासपुराणादिषूपबृंहिता । सर्वकम-

समाराध्यत्वं सर्वफलप्रदत्वं च शारीरके प्रतिष्ठापितम् ॥ गीयते च —(९-२३)

ये त्वन्यदेवताभक्ताः यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥

इति । प्रभुः फलप्रदानसमर्थ इत्यर्थः । तथाच 'श्रुतिस्मृतिर्ममैवाज्ञा' इतीश्वरबुद्धिरूपस्य शास्त्रस्यानुवर्तने भगवतः प्रीतिः । अतिवर्तने अप्रीतिरिति सिद्धान्तः । तथाच परमेश्वरनिग्रहानुग्रहावेव अदृष्टशब्दवाच्यं पुण्यं पापं च इति सिद्धान्तः ईश्वरवादिनाम् ॥

## श्रीभाष्यसम्मतिः.

अतएवेत्थं श्रीभाष्यम्—(२-२-३) "नन्वेवं क्षेत्रज्ञपुण्यपापरूपकर्मभिरेव सर्वाव्यवस्थास्सिध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा । पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथा तथा व्यवस्थया परिणस्यते यथा विषादिदूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुभूतः परिणामविशेषः देशकालव्यवस्थया दृश्यते । अतस्सर्गप्रलयव्यवस्था देवादिविषमसृष्टिः, कैवल्यव्यवस्था च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यते इति ॥

अनभिज्ञो भवान् पुण्णापुण्यस्वरूपयोः । पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये । शास्त्रं चानादिनिधनाविच्छिन्नसंप्रदायः निर्दोषो वेदराशिः। तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये। तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति । तथा आह द्रविडाचार्यः—फलसंबिभत्सया हि कर्मभिरात्मानं पिप्रीषन्ति । स प्रीतः अलं फलायेति शास्त्रमर्यादा इति । तथा —(४-१-१५) नच पुण्या-

पुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमास्ति" इति ॥

एतत्सर्वमभिप्रेत्य गद्यव्याख्याने वेदान्ताचार्यास्संजगृहुः—

सर्वज्ञेऽपि सदा देवे याच्ञाविज्ञापनादिभिः ।
तत्तदिष्टप्रतित्सात्मा प्रीतिरेव प्रसाध्यते ॥
तदेव चोदनोपज्ञं अपूर्वं तत्त्ववेदिनाम् ।
आराध्येन्द्राद्यपायेऽपि फलदानाय तिष्ठति ॥ इति ॥

कर्मस्वरूपे एवं स्थिते सति—

ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥

इत्यादीनां वचनानां विना क्लेशं तात्पर्यं सुगृहीतं भवति, लोकेऽपि हि निरवधिकानुग्रहे सति प्राचीनोऽनन्तो निग्रहः संशाम्यति । तस्माद्भगवदनुग्रहस्सर्वैः सम्पादनीय इति सर्वं चतुरश्रम् ॥

इत्यदृष्टपरीक्षेत्थं शास्त्रलोकानुसारतः ।
संक्षेपेण कृता तत्र बहु वक्तव्यमस्ति नः ॥
एतस्मिन् विषये प्रायः पामरा इव पण्डिताः ।
संशेरतेऽप्यनेकस्य स्वातन्त्र्याद्धि निरङ्कुशात् ॥
कालक्रमेण पूर्वेषामभिप्रायान्विशोध्य च ।
साधवस्सन्धिमिच्छन्तीत्येष न्यायः पुरस्कृतः ॥
अनुष्ठानाविरोधाय परीक्षा कर्मसाक्षिणी ।
कृता तया श्रीनिवासः प्रीयतां परमेश्वरः ॥
इत्थं लक्ष्मीपुरंश्रीनिवासविद्वन्मणेरियम् ।
शुभाऽदृष्टपरीक्षैषा जीयाल्लोकहितैषिणी ॥

इति वासुदेवः प्रीयताम् .